तीर्थविशेषः । यथा, महाभारते ।३।८३।१५०।
"विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्दोषैः सर्व्वैः स परिमुच्यते ॥"
पुं, महादेवः । यथा, महाभारते ।१३।१७।५६।
"विमोचनः सुसरणो हिरण्यकवचोद्भवः ॥")
विमोहनं, क्ली, वैचित्तीकरणम् । विपूर्व्वमुह-धातोरनट्(ल्युट्)प्रत्ययेन निष्पन्नम् ॥ (विमोहयतीति । वि+मुह+णिच्+ल्युः । विमोहके, त्रि । यथा, भागवते । ११ । २८ । ६ ।
"ततो विकुर्व्वतो जातो योऽहङ्कारो विमोहनः ॥")
विमोहितः, त्रि, (वि+मुह+णिच्+क्तः ।) मोहयुक्तः । मोहितः । यथा,—
"तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ।
उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥"
इति देवीमाहात्म्यम् ॥
बि(वि)म्बं, क्ली, (वी गत्यादिषु+"उल्वादयश्च ।" उणा० ४ । ९५ । इति वन् प्रत्ययेन निपातनात् साधुः ।) प्रतिबिम्बम् । कमण्डलुः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (मूर्त्तिः । यथा, भागवते । ३ । २ । ११ ।
"प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम् ॥"
तथाच राजतरङ्गिण्याम् । ३ । ४६६ ।
"मेघवाहनभूभर्त्तुः पत्न्या भिन्नाख्यया कृते ।
विहारेऽपि तया बुद्धबिम्बं साधु निवेशितम् ॥")
बिम्बिकाफलम् । तेलाकुचा इति भाषा । इति मेदिनी । वे, ७ ॥ (यथा, कुमारे । ३ । ६७ ।
"उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥")
अस्य पर्य्यायः । तुण्डिकेरी २ रक्तफला ३ बिम्बिका ४ पीलुपर्णी ५ । इत्यमरः ॥ ओष्ठी ६ बिम्बी ७ । इति रत्नमाला ॥ बिम्बा ८ बिम्बकम् ९ बिम्बजा १० । इति शब्दरत्नावली ॥ अस्य गुणाः । पित्तकफच्छर्द्दिरक्तदाहकुष्ठनाशित्वम् । इति राजवल्लभः ॥ अपि च ।
"बिम्बी रक्तफला तुण्डी तुण्डिकेरी च बिम्बिका ।
ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते ॥
बिम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित् ।
स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम् ॥"
इति भावप्रकाशः ॥
बि(वि)म्बः, पुं क्ली, (वी+"उल्वादयश्च ।" उणा० ४ । ९५ । इति वन्प्रत्ययेन साधुः ।) सूर्य्यचन्द्रमण्डलम् । इत्यमरः ॥ (यथा, प्रबोधचन्द्रोदये ६ अङ्के ।
"असौ त्वदन्यो न सनातनः पुमान्
भवान् न देवात् पुरुषोत्तमात् परः ।
स एव भिन्नस्त्वमनादिमायया
द्विधेव बिम्बं सलिले विवस्वतः ॥"
तथाच मार्कण्डेये । ८४ । ११ ।
"ईषत्सहासममलं परिपूर्णचन्द्र-
बिम्बानुकारि कनकोत्तमकान्तिकान्तम् ॥'
मण्डलमात्रेऽपि । यथा, ऋतुसंहारे । १ । ४ ।
"नितम्बबिम्बैः सुदुकूलमेखलैः
स्तनैः सहाराभरणैः सचन्दनैः ।
शिरोरुहैः स्नानकषायवासितैः
स्त्रियो निदाघं शमयन्ति कामिनाम् ॥"
यथाच कुमारे । ७ । २२ ।
"आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेशः ॥")
बि(वि)म्बः, पुं, (वी+वन्प्रत्ययेन साधुः ।) कृकलासः । इति मेदिनी । वे, ७ ॥
बि(वि)म्बकं, क्ली, (बिम्ब+स्वार्थे कन् ।) चन्द्रसूर्य्यमण्डलम् । बिम्बिकाफलम् । इति शब्दरत्नावली ॥ (सञ्चकः । छाँच इति भाषा ॥ यथा, नैषधे । २२ । ४७ ।
"विधिर्व्विधत्ते विधिना वधूनां
किमाननं काञ्चनसञ्चकेन ॥"
अत्र । "काञ्चनस्य सञ्चकेन बिम्बकेन ॥" इति नारायणीटीका ॥)
बि(वि)म्बजा, स्त्री, (बिम्बं फलं जायतेऽस्यामिति । जन्+डः ।) बिम्बिका । इति शब्दरत्नावली ॥
बि(वि)म्बटः पुं, सर्षपः । इति शब्दचन्द्रिका ॥
बि(वि)म्बा, स्त्री, (बिम्बं फलमस्त्यस्यामिति । बिम्ब+अच् । टाप् ।) बिम्बिका । इति शब्दरत्नावली ॥
बि(वि)म्बिका, स्त्री, बिम्बम् । इत्यमरः ॥ (यथा,—
"तुण्डी रक्तफला बिम्बी तुण्डीकेरी च बिम्बिका ॥"
इति वैद्यकरत्नमालायाम् ॥)
चन्द्रसूर्य्यमण्डलम् । इति शब्दरत्नावली ॥
बि(वि)म्बी, स्त्री, (बिम्ब+गौरादित्वात् ङीष् ।) बिम्बिका । इति शब्दरत्नावली ॥ (यथा,—
"काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत् ॥"
इति सुश्रुते उत्तरतन्त्रे ३२ अध्यायः ॥)
बि(वि)म्बुः, स्त्री, गुवाकः । इति केचित् ॥
बि(वि)म्बोष्ठः } त्रि, (बिम्ब+ओष्ठः । "ओत्वोबि(वि)म्बौष्ठः } ष्ठयोः समासे वा ।" इति पाक्षिकोऽकारलोपः ।) बिम्ब इव ओष्ठौ यस्य । इति मुग्धबोधव्याकरणम् ॥
वियच्चारी, [न्] पुं, (वियति आकाशे चरतीति । चर+णिनिः ।) चिल्लः । इति शब्दमाला ॥ आकाशगामिनि, त्रि ॥
वियत्, क्ली, (वियच्छति न विरमतीति । वि+यम+"अन्येभ्योऽपि दृश्यते ।" ३ । २ । १७८ । इति क्विप् । क्वौ गमादीनामिति मलोपे तुक् ।) आकाशम् । इत्यमरः ॥ (यथा, भागवते । ५ । ८ । ३३ ।
"तत्रैव तत्राभिहरःसरोज-
मालाननश्चः पवनं वियच्च ।
इदं दृशो जगतो विधाता
गतः परं लोकवियोगहेतुः ॥"
द्यावापृथिव्यौ । अत्र द्विवचनस्य प्रयोगः स्यात् । यथा, तैत्तिरीयब्राह्मणे । २ । १ । ३ । २ ।
"द्यावापृथिवी सहास्ताम् । ते वियती अब्रूताम् ॥"
तथाच शतपथब्राह्मणे । ७ । १ । २ । २३ ।
"तयोर्वियत्योर्योऽन्तरेणाकाश आसीत् तदन्तरिक्षमभवत् ॥" ॥ वि+या+शतृ । गमनशीले, त्रि । यथा, भागवते । ७ । ६ । १४ ।
"कुटुम्बपोषाय वियन्निजायु-
र्न बुध्यतेऽर्थं विहतं प्रमत्तः ॥"
तथा, तत्रैव । ९ । २१ । ३ ।
"वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ।
व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ॥"
"वियद्वित्तस्य वियतो गगनादिव उद्यमं विनैव दैवादुपस्थितं वित्तं भोग्यं यस्य । यद्वा वियत् व्ययं प्राप्नुवद्वित्तं भोग्यं यस्य ।" इति तट्टीकायां श्रीधरस्वामी ॥)
वियद्गङ्गा, स्त्री, (वियतो गङ्गा ।) स्वर्गगङ्गा । इत्यमरः ॥
वियद्भूतिः, स्त्री, (वियतो भूतिर्भस्मेव ।) अन्धकारः । इति त्रिकाण्डशेषः ॥
वियन्मणिः, पुं, (वियतो मणिः ।) सूर्य्यः । इति हारावली ॥
वियमः, पुं, (वि+यम+"यमः समुपनिविषु च ।" ३ । ३ । ६३ । इत्यप् ।) संयमः । इत्यमरः ॥ दुःखम् । इति स्वामी ॥
वियातः, त्रि, (विरुद्धं निन्द्यं यातः प्राप्तः ।) निर्लज्जः । इत्यमरः ॥
वियामः, पुं, (वि+यम+घञ् ।) संयमः । इत्यमरः ॥
वियुक्तः, त्रि, वियोगविशिष्टः । विपूर्व्वयुजधातोः क्तप्रत्ययेन निष्पन्नः ॥ (यथा, देवीभागवते ।२।९।१३।
"किं करोमि क्व गच्छामि मृता मे प्राणवल्लभा ।
न वै जीवितुमिच्छामि वियुक्तः प्रिययानया ॥")
वियोगः, पुं, (वि+युज+घञ् ।) विच्छेदः । तत्पर्य्यायः । विप्रलम्भः २ विप्रयोगः ३ विरहः ४ । इति हेमचन्द्रः ॥ (यथा, भागवते ।९।१३।८।
"यस्य योगं न वाञ्छन्ति वियोगभयकातराः ।
भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥")
वियोगभाक्, [ज्] त्रि, (वियोगं भजते इति । भज+ण्वि ।) विच्छेदयुक्तः । यथा, नैषधे ।
"वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुताहूयत चन्द्रवैरिणी ॥"
वियोगी, [न्] पुं, (वियोगोऽस्त्यस्येति । वियोग+इनिः ।) चक्रवाकः । इति शब्दचन्द्रिका ॥ वियोगयुक्ते, त्रि ॥ (यथा, मार्कण्डेये ।२१।२५।
"ताः शोच्या या वियोगिन्यो न शोच्या यां मृताः शुभे ।
भर्त्तुर्व्वियोगदुःखानि यया नानुभूतः हतशया ॥")

मद्भक्तियुक्तो धीं वालो जीवन्मुक्तश्च सन्ततम्।
तद्भक्तिहीनो मूर्खश्च जीवन्नपि मृतो हि सः॥
किञ्जप्यनेन तपसा यज्ञेन पूजनेन च।
कृष्णभक्तिविहीनस्य मूर्खस्य जीवनं वृथा॥
येनात्मना जीवितश्च तमेव नहि मन्यते।
यावदात्मा शरीरेऽस्ति तावत् स शक्तिसंयुतः॥
पश्चाद्यान्ति गते तस्मिन् न स्वतन्त्राश्च शक्तयः।
स च त्वाञ्च महाभाग सर्व्वात्मा प्रकृतेः परः॥
स्वेच्छामयश्च सर्व्वेभ्यो ब्रह्मज्योतिः सनातनः।
इत्युक्त्वा बालकस्तत्र विरराम च नारद॥
उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम्॥
श्रीकृष्ण उवाच।
सुचिरं सुस्थिरं तिष्ठ यथाहं त्वं तथा भव।
ब्रह्मणोऽसंख्यपाते च पातस्ते न भविष्यति॥
अंशेन प्रतिब्रह्माण्डे त्वञ्च क्षुद्रविराड्भव।
त्वन्नाभिपद्मे ब्रह्मा च विश्वस्रष्टा भविष्यति॥
ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव तु।
शिवांशेन भविष्यन्ति सृष्टिसंहारणाय वै॥
कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः।
पाता विष्णुश्च विषयी क्षुद्रांशेन भविष्यति॥
मद्भक्तियुक्तः सततं भविष्यसि वरेण मे।
ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम्॥
मातरं कमनीयाञ्च मम वक्षःस्थलस्थिताम्।
यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत॥
गत्वा स्वलोकं ब्रह्माणं शङ्करं स उवाच ह।
स्रष्टारं स्रष्टुमीशञ्च संहर्त्तारञ्च तत्क्षणम्॥
श्रीकृष्ण उवाच।
सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव।
महाविराड्लोमकूपे क्षुद्रस्य च विधे शृणु॥
गच्छ वत्स महादेव ब्रह्मभालोद्भवो भव।
अंशेन च महाभाग स्वयञ्च सुचिरं तपः॥
इत्युक्त्वा जगतां नाथो विरराम विधिस्ततः।
जगाम ब्रह्मा तं नत्वा शिवश्च शिवदायकः॥
महाविराड्लोमकूपे ब्रह्माण्डे गोलके जले।
बभूव च विराट् क्षुद्रो विराडंशेन सांप्रतम्॥
श्यामो युवा पीतवासाः शयानो जलतल्पके।
ईषद्धास्यः प्रसन्नास्यो विश्वव्यापी जनार्द्दनः॥
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः।
संभूय पद्मदण्डञ्च बभ्राम युग-लक्षकम्॥
नान्तं जगाम दण्डस्य पद्मनाभस्य पद्मजः।
नाभिजस्य च पद्मस्य चिन्तामाप पिता तव॥
स्वस्थाने पुनरागत्य दध्यौ कृष्णः पदाम्बुजम्।
ततो ददर्श क्षुद्रन्तं ध्यानेन दिव्यचक्षुषा॥
शयानं जलतल्पे च ब्रह्माण्डे गोलकाप्लुते॥
यल्लोमकूपे ब्रह्माण्डं तञ्च तत्परमेश्वरम्।
श्रीकृष्णञ्चापि गोलोकं गोपगोपीसमन्वितम्॥
तं संस्तूय वरं प्राप ततः सृष्टिञ्चकार सः।
बभूवुर्ब्रह्मणः पुत्त्रा मानसाः सनकादयः॥
ततो रुद्राः कपालाच्च शिवांशैकादश स्मृताः।
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः॥
चतुर्भुजश्च भगवान् श्वेतद्वीपनिवासकृत्।
क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज्ज च॥
स्वर्गं मर्त्यञ्च पातालं त्रिलोकं सचराचरम्।
एवं सर्व्वं लोमकूपे विश्वं प्रत्येकमेव च॥
प्रतिविश्वे क्षुद्रविराट् ब्रह्मविष्णुशिवादयः।
इत्येवं कथितं वत्स श्रीकृष्णकीर्त्तनं परम्॥
सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३ अध्यायः॥
स्वायम्भुवमनुः। यथा,—
"गतेषु तेषु रक्षार्थं प्रजामावनतामिमाम्।
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम्॥
सम्बभूव तया सार्द्धमतिकामातुरो विभुः।
सलज्जां चकमे देवः कमलोदरमन्दिरे॥
यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः।
ततः कालेन महता ततः पुत्त्रोऽभवन्मनुः॥
स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम्।
तद्रूपगुणसामान्यादधिपूरुष उच्यते॥
वैराजा यत्र ते जाता बहवः शंसितव्रताः।
स्वायम्भुवा महाभागा सप्त सप्त तथापरे॥
स्वारोचिषाद्याः सर्व्वे ते ब्रह्मतुल्याः स्वरूपिणः।
औत्तमिप्रमुखास्तद्वद्येषां त्वं सप्तमोऽधुना॥"
इति मात्स्ये ३ अध्यायः॥

विराटः, पुं, देशविशेषः। इति शब्दरत्नावली॥ (अत्रैव पञ्चपाण्डवाः सह द्रौपद्या अज्ञातमुषितवन्तः। यथा, महाभारते।४।१।१।
"कथं विराटनगरे मम पूर्व्वपितामहाः।
अज्ञातवासमुषिता दुर्य्योधनभयार्द्दिताः॥")
तद्देशीयराजा। यथा,—
"अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः॥"
इति श्रीभगवद्गीतायाम् १ अध्यायः॥

विराटकः, पुं, राजपट्टः। इति हेमचन्द्रः॥

विराटजः, पुं, (विराटे जायते इति। जन्+डः।) विराटदेशीयहीरकः। तत्पर्य्यायः। राजपट्टः २ राजावर्त्तः ३। इति हेमचन्द्रः॥ विराटराजजाते, त्रि। (यथा, महाभारते। १४। ६२। ८।
"सुवर्णानि च राजेन्द्र दिव्यवानि विराटजा।
नाभुङ्क्त पतिदुःखार्त्ता तदाभूत्करुणं महत्॥")

विराणी, [न्] पुं, हस्ती। इति शब्दमाला॥

विराधः, पुं, (विराधयति लोकान् पीडयतीति। वि+राध+अच्।) राक्षसभेदः। यथा,—
"लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा रामं ततोऽब्रवीत्।
पिता मेऽभूत् सुपर्व्वाख्यो माता मे च शतह्रदा॥
विराध इति मामाहुः पृथिव्यां सर्व्वराक्षसाः।
उत्सृज्य प्रमदामेनां पलायेतां पराङ्मुखौ॥
तच्छ्रुत्वा राममाहेदं लक्ष्मणः किं प्रतीक्षसे॥
इत्युक्तो लक्ष्मणो वीर आनम्य सुमहद्धनुः।
उत्ससर्ज्ज शरं घोरं कालदण्डोपमं ततः॥
तच्छरीरं महाकायं भित्त्वा पातालमाविशत्॥
पपातान्ध गतप्राणः स्रवेण रुधिरं वमन्।
ततोऽयो राममाहेदं प्राञ्जलिर्विनयान्वितः॥
तुम्बुरुर्नाम गन्धर्व्वः प्रदिष्टो राघवाहं नृप।
अभिशापादहं घोरं राक्षसो वैश्रवणेन वै॥
प्रसाद्यमानः स मया प्रावदन्मां पुनः पुनः।
यदा दाशरथी रामो भविष्यति महाबलः॥
शापस्यान्तोऽभविष्यत्ते तेन राजेन्द्र संयुगे।
प्रसादात्तव मुक्तोऽहं गमिष्यामि स्वमालयम्॥"
इति वह्निपुराणे रूपणखाकर्णनासिकोत्कर्त्तनं नामाध्यायः॥

विराधनं, क्ली, (वि+राध+ल्युट्।) पीडा। इति शब्दरत्नावली॥

विराधानं, क्ली, पीडा। इति शब्दरत्नावली। विवाधानमिति च पाठः॥

विरामः, पुं, (वि+रम+घञ्।) शेषः। निवृत्तिः। विरतिः। तत्पर्य्यायः। अवसानः २ सातिः ३। इति जटाधरः॥ सन्धिः ४। इति त्रिकाण्डशेषः॥ (यथा, मनौ। २। ७३।
"अध्येष्यमाणन्तु गुरुं नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयात् विरामोऽस्त्विति चारमेत्॥")
परवर्णाभावः। इति व्याकरणम्॥ (यथा, पाणिनौ।१।४।११०। "विरामोऽवसानम्॥")

विरालः, पुं, विडालः। इत्यमरटीका॥

विरावः, पुं, (वि+रु+घञ्।) शब्दः। इत्यमरः॥ (यथा, महाभारते। ३। १४६। ६४॥
"सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत!।
मुक्तो विरावः सुमहान् पर्व्वतो येन पूरितः॥"
इत्यत्रप्रदत्ताम्बान्यतरः। यथा, महाभारते। ३। ६६। १७।
"विरावश्च तुरागश्च तस्मिन् युक्तौ रथे हयौ॥")

विरावी, [न्] त्रि, विरावविशिष्टः। विरावो विद्यतेऽस्येति इन्प्रत्ययेन निष्पन्नः॥ (यथा, वृहत्संहितायाम्। ५३। ६।
"दिशि शान्तायां शकुनो मधुरविरावी यदा-तदा वाच्यः।
अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितोऽङ्गेवा॥")

विरिक्तः, त्रि, कृतविरेकः। यथा,—
"दुर्व्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलकम्।
पुरीषवातसङ्गश्च काण्डुमण्डलगौरवम्॥"
इति भावप्रकाशः॥

विरिञ्चः, पुं, ब्रह्मा। (यथा, भागवते।८।५।३८।
"बलान्महेन्द्रस्त्रिदशाः प्रचेता-
स्मन्योगिरीशो विपणाद्विरिञ्चः॥")
विष्णुः। शिवः। इति शब्दरत्नावली॥

विरिञ्चनः, पुं, ब्रह्मा। इति हेमचन्द्रः॥

विरिञ्चिः, पुं, शिवः। विष्णुः। विधाता। इति शब्दरत्नावली॥ (यथा, महाभारते। १। १८। १७।
"इत्यमस्त्विति तं देवाः पितामहमथा-ब्रुवन्।
उक्त्वैनं वचनं देवान् विरिञ्चिस्त्रिदिवं ययौ॥")

विरिञ्च्यः, पुं, स्वरः। इति मुग्धबोधव्याकरणम्॥

विरुद्‌:, पुं, गुणोत्कर्षादिवर्णनम्। यदुक्तम्।
"शाब्दिकः कल्पितरूपेऽपि विरुदो द्विविधो मतः।
संस्कृतमिश्रो तत्र मध्यमः पूर्व्वदङ्गयोः॥

द्विचतुःषड्दशभ्यश्च कलास्तु विरुदे मताः ।
दशभ्यो नाधिकाः कार्य्याः कलास्तु विरुदे बुधैः ॥
कलिकाभ्यस्तु विरुदे भिदासावेव कीर्त्तिता ।
विरुदं कवयः प्राहुर्गुणोत्कर्षादिवर्णनम् ।
विरुदः कलिका चान्ते धीरवीरादिशब्दभाक् ॥
इत्युदाहृतः । इति श्रीरूपगोस्वामिकृतश्रीगोविन्दविरुदावलीभाष्ये श्रीबलदेवविद्याभूषणः ॥
विरुदावली, स्त्री, ( विरुदानामावली । ) विरुदश्रेणी । स्तवमाला । तल्लक्षणादि यथा,—
"अथोच्य विरुदावल्या लक्षणं ग्रन्थकृत्कृतम् ।
एतामेतु पठति प्राज्ञस्तदा बोधोऽस्य पुष्कलः ॥
सामान्यविरुदावल्या गोविन्दविरुदावली ।
योऽभ्यधायि विशेषस्तैः स नावदिह लिख्यते ॥
कलिका लोकविरुदैर्युता विविधलक्षणैः ।
कीर्त्तिप्रतापशौटीर्य्यसौन्दर्य्यमिषशालिनी ॥
कलिकाद्यन्तसंसर्गमयी दोषविवर्ज्जिता ।
शब्दाडम्बरसंबद्धा कर्त्तव्या विरुदावली ॥"
इति श्रीरूपगोस्वामिकृते श्रीगोविन्दविरुदावलीभाष्ये श्रीबलदेवविद्याभूषणः ॥ * ॥ कलिकालक्षणं कलिकाशब्दे लिखितम् । विरुदलक्षणं तच्छब्दे द्रष्टव्यम् ॥
विरुद्धः, त्रि, (वि + रुध + क्तः ।) विरोधविशिष्टः । यथा । विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वम् । इति जैमिनिसूत्रम् ॥
"विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया ।
तन् चन्तव्यं बुधैरेव स्तुतितत्त्वबुभुत्सया ॥
स्तुतितत्त्वे प्रमादाद्यद्विरुद्धं बहुभाषितम् ।
गुणलेशानुरागेण तच्छोध्यं धर्म्मदर्शिभिः ॥"
इति तिथ्यादितत्त्वम् ॥
( इशममनोर्न्नसमावर्ण्यः देवतान्यतमः । यथा, भागवते । ८ । १३ । २० ।
"हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः ।
गुणानना विरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥"
क्ली, विवादार्ह्णीयदोषविशेषः । यथा । "विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं तत्र दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनर्यथायुर्वैदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिकसमय इति । तत्रायुर्वैदिकसमयः चतुष्पादमिति । आलभ्य पशुन् इति याज्ञिकसमयः । सर्व्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयस्तत्र स्वसमयविपरीतमुच्यमानं विरुद्धमिति ॥" इति चरके विमानस्थानेऽष्टमोऽध्याये ॥ )
विरूढः, त्रि, अङ्कुरितः । ( यथा, "विरूढ़नानं मङ्कुरितधान्यकरालसम् ।" इति माधवकृतनिदानविरुद्धे शूलव्याख्याने विजयरक्षितः ॥ ) जातः । इति मेदिनी । ढ, ८ ॥ ( यथा, रघुवंशे । २ । २६ ।
"गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥" )
आरोहणविशिष्टः । यथा ।
"वक्षसि विरूढ़ं पदमपि दिवौ रक्तूल्लोमरन्ती

लीलालूनपुनर्विरूढ़शिरसो वीरस्य लिप्सुर्वरम् ।"
इत्यादि मुरारिः ॥
विरूपं, क्ली, पिप्पलीमूलम् । इति राजनिर्घण्टः ॥
विरूपः, त्रि, ( विकृतं रूपं यस्य । ) कुत्सितः । कुरूपः । यथा,—
"विरूपोन्मत्तनिःस्वानामकृत्वापूर्व्वकं हि यत् ।
पूरणं दानमालाभ्यामनुग्रह उदाहृतः ॥"
इति रामतर्कवागीशः ॥
( यथा, बृहत्संहितायाम् । ७० । २३ ।
"या तुङ्गरोष्ठेन समुन्नतेन
रूक्षाग्रकेशी कलहप्रिया सा ।
प्रायो विरूपासु भवन्ति दोषा
यत्राकृतिस्तत्र गुणा वसन्ति ॥"
परित्यक्तरूपः । यथा, ऋग्वेदे । १० । ६५ । १६ ।
"यद्विरूपाचरं मर्त्त्येष्ववसं रात्रीः शरदश्चतस्रः ।"
"यद्यदा विरूपा परं मनुष्यस्य सन्यकात् विगतवयजभूतदेवरूपाः ।" इति तद्भाष्ये सायणः ॥ नानारूपः । यथा, ऋग्वेदे । ३ । ५३ । ७ ।
"इमे भोजा अङ्गिरसो विरूपा
दिवस्पुत्रासो असुरस्य वीराः ॥"
"हे इन्द्र इमे यागं कुर्व्वाणा भोजाः सौदासाः क्षत्रियाः तेषां याजका विरूपाः विविधरूपा मेधातिथिप्रभृतयः ॥" इति तद्भाष्ये सायणः ॥ विरुद्धः । यथा, साहित्यदर्पणे । १० परिच्छेदे ।
"विरूपयोः संघटना या च तद्विषमं मतम् ॥"
उदाहरणं यथा,—
"क्व वनं तरुवल्कभूषणं
नृपलक्ष्मीः क्व महेन्द्रवन्दिता ॥" )
स्वार्थे के विरूपकश्च ॥
विरूपः, पुं, सुमनोराजपुत्रः । यथा,—
"जाताः सुमनसः पुत्त्रास्त्रयः शूरा महाबलाः ।
सुमतिश्च विरूपश्च सत्यः शास्त्रार्थपारगाः ॥"
इति कालिकापुराणे ९० अध्यायः ॥
विरूपा, स्त्री, दुरालभा । अतिविषा । इति राजनिर्घण्टः ॥
विरूपाक्षः, पुं, ( विरूपे अक्षिणी यस्य । "सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।" इति षच् ।) शिवः । इत्यमरः ॥ ( यथा, साहित्यदर्पणे । १० ।
"हशा दग्धं मनसिजं जीवयन्ति दृशैव याः
विरूपाक्षस्य जयिनीस्तास्तुमो वामलोचनाः ॥")
रुद्रभेदः । इति जटाधरः ॥ तस्य पुरी सुमेरोर्नैरृतकोणे वर्त्तते । यथा,—
"तथा चतुर्थे दिग्भागे नैरृताधिपतेः शुभा ।
नाम्ना कृष्णावती नाम विरूपाक्षस्य धीमतः ॥"
इति वाराहे ब्रह्मगीता ॥
( विरूपे, त्रि । यथा, कुमारे । ५ । ७२ ।
"वपुर्व्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ॥")
विरूपिका, स्त्री, ( विकृतं रूपं यस्याः । कन् । टापि अत इत्वम् । ) कुरूपा । यथा,—

"नाश्नन्ति परिविन्दन्ति न यज्ञा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥"
इत्युद्वाहतत्त्वम् ॥
विरूपी, [न्] पुं, ( विरुद्धं रूपमस्यास्तीति । इनिः । ) जाहकजन्तुः । इति राजनिर्घण्टः ॥ कुरूपविशिष्टे, त्रि ॥
विरेकः, पुं, ( वि + रिच + घञ् । ) मलभेदः । तत्पर्य्यायः । रेचनम् २ रेकः ३ रेचना ४ विरेचनम् ५ । इति शब्दरत्नावली ॥ प्रस्कन्दनम् ६ । इति रत्नमाला ॥ ( यथा, वैद्यके ।
"धूमालुण्ठशिरो विरेकवमनस्वेदोपनाहादिकं
पानाहारविहारभेषजमिदं श्लेष्मामयघ्नं जयेत् ॥"
अस्य योग्यायोग्या यथा,—
"बालवृद्धकृशक्षीणमौनवार्भयार्द्दिताः ।
रूक्षशोषक्षयायुक्ता गर्भिणी च नवज्वरी ॥
अधो गच्छति यस्यास्रक्कृतिकातङ्करोगिणी ।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम् ॥
नवज्वरे च ये योगा भेदकाः परिकीर्त्तिताः ।
ते नयेव प्रयोक्तव्या वीक्ष्य देहमलादिकम् ॥"
इति वैद्यकसेन्द्रसारसंग्रहे विरेकाधिकारे ॥)
विरेचकः, त्रि, रेचकः । विरेककारकः । सारकः । मलभेदकः । जोलाव इति भाषा ॥ विपूर्व्वकरिच्धातोर्ण्वुप्रत्ययेन निष्पन्नः । (यथा, वैद्यके ।
"पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा ।
फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचकम् ॥")
विरेचनं, क्ली, ( वि + रिच + ल्युट् । ) विरेकः । इति शब्दरत्नावली ॥ तत्कारकौषधं यथा,—
"हरीतकी समगुडा मधुना सह पेषिता ।
विरेचनकरी यत्र भवतीति न संशयः ॥
त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ।
जयस्तम्भहरी स्येव उत्तमन्तु विरेचनम् ॥"
अपि च ।
"त्रिफला बदरं भार्ङ्गी पिप्पली च विरेचकृत् ।
हरीतकी सोष्णनीरा सवयश्च विरेचकृत् ॥"
इति गारुडे १८७ । १६६ अध्यायौ ॥ * ॥
अन्यच्च । अथ विरेचनविधिः ।
"स्निग्धस्विन्नाय वान्ताय दद्यात् सम्यग्विरेचनम् ।
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत् कफः ॥
मन्दाग्निगौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम् ।
अथवा पाचनैरामं बलासं परिपाचयेत् ।
अन्यदात्ययिके कार्य्ये शोधनं शीलयेद्बुधः ॥"
आत्ययिके प्राणसङ्कटे ।
"पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ।
उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः ॥
बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥

दीपनत्वञ्च ॥ अस्य पक्वफलगुणाः । मधुरत्वम् । गुरुत्वम् । कटुत्वम् । तिक्तत्वम् । कषायत्वम् । उष्णत्वम् । संग्राहित्वम् । त्रिदोषनाशित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च

"श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् ।
वातः श्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥"
इति भावप्रकाशः ॥ * ॥

किञ्च ।
"बिल्वं शाटं कषायोष्णं पाचनं वह्निदीपनम् ।
संग्राहि तिक्तकटुकं तीक्ष्णं वातकफापहम् ।
पक्वं सुगन्धि मधुरं दुर्ज्जरं ग्राहि दोषलम् ॥
फलेषु परिपक्वेषु यो गुणः समुदाहृतः ।
बिल्वादन्यत्र स ज्ञेयो बिल्वमामं गुणोत्तरम् ॥
कफवातामपित्तघ्नी ग्राहिणी बिल्वपेषिका ॥"
इति राजवल्लभः ॥

अन्यच्च ।
"काञ्जिके संस्थितं बिल्वमग्निसन्दीपनं परम् ॥"
इति वैद्यकम् ॥ * ॥

बिल्वोत्पत्त्यादिर्यथा,—
"बिल्वादिपालनं कुर्य्यात् शुभं भयदमन्यथा ।
श्रीवृक्षान् रोपयेत् यस्तु यदि स्वर्गान्न हीयते ॥
भृगो लक्ष्मीश्च या धेनुर्गोरूपा सा गता
मही्म् ।
तद्गोमयभवो बिल्वः श्रीश्च तस्मादजायत ॥
गिराहतिं पतिं दृष्ट्वा क्रोधेन महता ततः ।
शप्ता सा उमया देवी सर्व्वभोग्या भवाधमे ॥
ततः संप्रणता भाना मामेवं भवतु प्रिये ।
प्रियत्वं सर्व्वलोकेऽपि सुरासुरनमस्कृता ॥
माता त्वं सर्व्वलोकानामवनानां विशेषतः ।
एवमात्मवशां कृत्वा शापमोक्षमयाचत ॥
वरं ददौ च सा कामं शापमोक्षप्रदं नृप ।
क्षीराब्धौ त्वं भृगाङ्गेन सह गोभिर्धनेन च ॥
वत्स्य मथने यावत् ततो विष्णुमवाप्स्यसि ।
पतिं त्वं सर्व्वलोकानां पूज्यं श्रेष्ठं महाबलम् ॥
तस्य वक्षःस्थिता भद्रे तुष्टा त्वं विचरिष्यसि ।
लोकभोग्या च भूमित्वादन्यथैषु नृपेषु च ॥
न जातिरूपशौर्य्यादि न वेश्म न शुभा मतिः ।
भविष्यति यदा चेह चपला जलबिन्दुवत् ॥
बिल्ववृक्षः प्रियः शम्भोस्तव योनिर्भविष्यति ।
सर्व्वपुष्पोत्तमश्रेष्ठो देवाहारो मनोरमः ॥ * ॥
तच्छेदः सर्व्वलोकानां छेदनाशः सदा नृणाम् ।
ये च पापा दुराचाराः श्रीतरोश्छेदकारिणः ।
ते लवीच्यादिनरके पाच्यन्ते अक्षयो दिनम् ॥
सुदुःखिता भविष्यन्ति नरा दुष्कुलिनः सदा ।
तत्र देशे भयं नित्यं चिरं राजा न जीवति ।
न च क्षयमतिः कश्चिद्बिल्ववृक्षस्य छेदकः ॥
क्रियते यत्र विच्छेदः सपुष्पफलिनस्तरोः ।
अनावृष्टिभयं घोरं तस्मिन् देशे प्रजायते ॥"
इति वह्निपुराणे वामनप्रादुर्भावनामाध्यायः ॥ * ॥
मतान्तरे तस्योत्पत्तिर्यथा,—
शिव उवाच ।
"मातः सतुमतकये मा मा छिन्धि स्तनं परम् ।
यस्ते छिन्नस्तनो वामो जायतां पुनरेव सः ।
ज्ञाता ते परमा भक्तिः पूर्णस्तेन मनोरथः ॥
यश्च छिन्नस्तनो दत्तो मल्लिङ्गोपरि ते शुभे ।
सोऽस्तु वृक्षः क्षितौ पुण्यो नाम्ना श्रीफल
इत्युत ॥
मूर्त्तिर्मास्तव वै भक्तिर्वृक्षः श्रीफलनामकः ।
त्वल्लोके लिताबास्तां यावच्चन्द्रदिवाकरौ ॥
स तरुर्मम वै लक्ष्मि परमः सुप्रियो भवेत् ।
तत्पत्रैश्चैव मे पूजा भविष्यति न चान्यथा ॥
स्वर्णमुक्ताप्रवालादि पुष्पाण्यन्यानि च ध्रुवम् ।
श्रीफलच्छदलेशस्य कलां नार्हन्ति कोटिकाम् ॥
यथा मे श्रीफलतरुर्यथा गङ्गाजलं मम ।
तथा प्रियतमं लक्ष्मि त्रिपत्रः श्रीफलच्छदः ॥
इत्युक्तः स तथेत्युक्त्वा महेशोऽन्तर्दधे सखि ।
कपालमोचनक्षेत्रे वृक्षः श्रीफलकोऽर्च्चितः ॥"
इति वृहद्धर्म्मपुराणे १० अध्यायः ॥ * ॥
अस्य गोमयोद्भवत्वं यथा,—
"यज्ञानां चेह संभूत्यै यथा हरिहरस्य च ।
गोमयो रोचना क्षीरं मूत्रं दधि घृतं गवाम् ॥
षड़ङ्गानि पवित्राणि तथा सिद्धिकराणि च ।
उत्थितो बिल्ववृक्षस्तु गोमयान्मुनिसत्तम ।
तत्रासौ वसते लक्ष्मीः श्रीवृक्षस्तेन चोच्यते ॥"
इति वह्निपुराणे वैष्णवधर्म्मे शुद्धिव्रतनामाध्यायः ॥ * ॥
देव्युवाच ।
"वैशाखशुक्लपक्षस्य तृतीयायां सखि त्वयम् ।
जातो वै श्रीफलतरुर्माहात्म्यं तस्य कथ्यते ॥
जाते तु श्रीफलतरौ देवाः सर्व्वे सवासवाः ।
ब्रह्मा नारायणश्चापि देवपत्न्यः समागताः ॥
ददृशुः स्निग्धविटपं त्रिपत्रैर्मृदुलैर्युतम् ।
दीप्यमानं तेजसैव शिवरूपं शिवप्रदम् ॥
प्रणेमुः विविशुश्चात्र वासचक्रुः सुखान्विताः ।
तन्माहात्म्यं भगवानुवाच विष्णुरव्ययः ॥
विष्णुरुवाच ।
अयं नाम्ना बिल्व इति मालूरः श्रीफलस्तथा ।
शाण्डिल्यश्चाथ शैलूषः शिवः पुण्यः शिवप्रियः ॥
देवावासस्तीर्थपदः पापघ्नः कोमलच्छदः ।
जयो विजयनामा च विष्णुस्त्रिनयनो वरः ॥
धूम्राक्षः शुक्लवर्णश्च संयमी श्राद्धदेवकः ।
इत्येकविंशतिं नाम्नां दधात्येव तरूत्तमः ॥ * ॥
धनुःशतञ्चास्य मूलात् सर्व्वाणि तीर्थमुच्यते ।
अधो भूमेस्तथा तीर्थसतस्तीर्थत्रयं सखि ॥
ऊर्द्धपत्रं हरो देवः पत्रं वामं विधिः स्वयम् ।
अहं दक्षिणपत्रश्च त्रिपत्रदलमित्युत ॥
अस्य च्छायाञ्च पत्रञ्च लङ्घयेन्न पदा स्पृशेत् ।
हरते यद्धनादायुः पदा स्पर्शात् श्रियं हरेत् ॥
पत्रपुष्पसहस्रस्य फलपत्रसमापि च ।
दर्शने प्रणतौ स्पर्शे स्नानसम्मार्ज्जने तथा ।
पूजने जपने दाने क्रमान्मन्त्रानुदीरयेत् ॥
बिल्ववृक्ष महाभाग महेशस्य सदा प्रियः ।
शिवदर्शनकाङ्क्षीति प्रणीदाक्षिप्तवाक्तव ॥
नर एतेन मन्त्रेण प्रणम्य प्रणमेत् शुभम् ।
प्रपश्येत् स श्रियं पश्येत् प्रणमेत्तदनन्तरम् ॥
ॐ नमो बिल्वतरवे सदा शङ्कररूपिणे ।
सफलानि ममाङ्गानि कुरुष्व शिवहर्षद ॥
मन्त्रेणानेन मालूरमष्टाङ्गैः प्रणमेत् कृती ।
स वैष्णवो मतो भक्तः स मे प्रियतरः परः ॥
शिवपूजक मालूर प्रियस्पर्श महातरो ।
स्पृशामि त्वां महापापसञ्चयान् मे प्रणाशय ॥
देववृक्षवरश्रेष्ठ स्नानन्ते सुमनोहरम् ।
कौड़न्यागत्य विबुधा मार्ज्जये तत् प्रसीद मे ॥
मन्त्रेणानेन बिल्वस्य दशहस्तम्भलं न्यसेत् ।
सगोमयजलैः प्रातःसमये स तु वैष्णवः ॥
ॐ द्रुमाय श्रीफलाय नमो दशभिरक्षरैः ।
मन्त्रेण पूजयेद्बिल्वं जपेच्छक्तिक्रमात्तथा ॥
पुण्यवृक्ष महाभाग मालूर श्रीफल प्रभो ।
महेशपूजनार्थाय तत्पत्राणि चिनोम्यहम् ॥
मन्त्रेणानेन चिनुयाद्बिल्वपत्राणि भक्तितः ।
पञ्चान्तद्वादशीनायं मध्याह्नभिन्नकालतः ॥
शाखाभङ्गो न कर्त्तव्यो नैवारोहेत्तथा तरुम् ।
वरमावृत्य चिनुयान्न शाखाभञ्जनं क्वचित् ॥
खण्डितैश्च शिवः पूज्यः पत्रैरन्यैश्च खण्डितैः ।
मल्लावानन्तरं बिल्वपत्रं पर्य्युषितं भवेत् ॥
पूज्या एतेन वै देवाः सूर्य्यलम्बोदरौ विना ।
बिल्ववृक्षवनं यत्र सा तु वाराणसी पुरी ॥
पञ्च बिल्वद्रुमा यत्र तत्र तिष्ठेत् स्वयं हरिः ।
सप्त बिल्वद्रुमा यत्र तत्र दुर्गायुतो हरः ॥
एको बिल्वतरुर्यत्र तत्र शम्भुर्म्मया सह ।
बिल्ववृक्षा यत्र दश तत्र शम्भुर्गणैः सह ॥
एतान्युक्तानि तीर्थानि देवाः सर्व्वे मरुद्गणैः ।
यत्र वाप्यां गृहस्थस्य कोण ईशानगामके ।
जायते श्रीफलतरुर्न तत्र विपदः क्वचित् ॥
पूर्व्वस्यां सुखदः स स्याद्दक्षिणे यमभीतिहा ।
पश्चिमे च प्रजादायी दृष्टो बिल्व उदाहृतः ।
श्मशाने च नदीतीरे प्रान्तरे वा वनान्तरे ।
बिल्ववृक्षतलं प्रोक्तं सिद्धपीठस्थलं सुधीः ॥
न मध्यप्राङ्गणे वृक्षं स्थापयेत् श्रीफलाश्रमम् ।
दैवाद्यदि प्रजायेत सदा शिववदर्च्चयेत् ॥
चैत्रादिचतुरो मासान् शम्भवे परमात्मने ।
दत्तं स्याद्बिल्वपत्रैकं लक्षधेनुसमं सुराः ॥
मध्याह्नकाले ये मर्त्त्या बिल्वं कुर्य्युः प्रदक्षिणम् ।
तैः सुमेरुर्गिरिवरः कृत एव प्रदक्षिणम् ॥
न छिन्द्यात् श्रीफलतरुं न दहेत् काष्ठमेव च ।
विना ब्राह्मणयज्ञार्थं पतितो बिल्वविक्रयी ॥
पक्वबिल्वसमुद्भूतं यो भक्षे स्पृहिं मानवः ।
यमाधिकारो नात्र स्यात् कृतः पापोपपातकैः ॥
बिल्वपत्रं फलं बीजं भूमौ पतितमीश्वरः ।
स्वयं गृह्णाति शिरसा वैयर्थ्यभयशङ्कितः ॥
चैत्रादिचतुरो मासान् सिञ्चेद्बिल्वतरुं कृती ।
यथा स्निग्धो भवेद्वृक्षस्तथा तत्पितरोऽपि च ।
चैत्रादिचतुरो मासान् सदा भ्रमति शङ्करः ।
नवीनबिल्वपत्रार्थी भुक्तिमुक्तिप्रदायकः ॥
हरिमानसरे यत्र वैद्यनाथो महेश्वरः ।
तत्राश्रयो बिल्ववृक्षः स्वर्णवृक्ष उदाहृतः ॥

कामरूपे कामतरुः काशयामुक्तस्तथादिमः ।
काञ्चीपुरे पुरः प्रोक्तः श्रीफलोऽव्ययपुण्यदः ।
तेऽपि तीर्थविशेषाः स्युर्न्तीर्थेऽस्यापि सदातुलाः ॥
देव्युवाच ।
यतस्त्वमेव कान्ते तु प्रसुरागात् वै सखि ।
ब्रह्मणा विष्णुना पत्रैः पूजितः श्रीफलेरभूत् ॥
ततः सर्व्वे यथास्थानं जग्मुर्नारायणादयः ।
कथितोऽयं मया सख्यौ बिल्ववृक्षस्तरूत्तमः ॥
अयं वा संप्रोक्तः शिवनरुकथापुण्यनिचयः
पवित्रः श्रोतव्यः श्रवणरमणीयः खलु सताम् ।
शिवे विष्णौ भेदापहरण उदारः सुमनसां
सुसेव्यः संपाद्यः प्रभवति शिवस्यापि निकटः ॥"
इति च बृहद्धर्म्मपुराणे बिल्ववृक्षमाहात्म्यम् ११ अध्यायः ॥*॥ तन्त्रमते तस्योत्पत्तिर्यथा,—
देव्युवाच ।
"कथं सा विष्णुवनिता बिल्ववृक्षो बभूव ह ।
ज्योतीरूपं महेशं प्रार्थिता ब्रह्मादिभिः सदा ॥
तत्र मेरुगुहद्वारादागी सर्व्वेषां प्रियतां गता ।
विष्णोरतिप्रिया नित्यं साभूत् सरस्वती सदा ॥
तादृक् प्रीतिर्न लक्ष्म्याश्च जायते केशवस्य च ।
इतिचिन्तापरा लक्ष्मीर्ययौ श्रीशैलमन्दिरम् ॥
प्राप्य मल्लिङ्गमेकान्तं तपस्तेपेऽतिदारुणम् ।
तथापि यदि नैवाभूत् कृपा मे परमेश्वरि ॥
तदा सा वृक्षरूपेण स्थिता लिङ्गप्रिया सती ।
पत्रैः पुष्पैः फलैः तोयैः पूजयामास सन्ततम् ॥
कोटिवर्षं महादेवि ततो मेऽनुग्रहोऽभवत् ।
तेनैवानुग्रहेणैव विष्णोर्वक्षःस्थिताभवत् ॥
सदैव परमेशानि विप्रवक्षा सदैव हि ।
अतस्तु कारणाद्देवि तद्रूपेण हरिप्रिया ॥
तदैव पूर्णवेद्मां सा मद्भक्ता मातुला शिवे ।
अनन्तं वृक्षमाश्रित्य तिष्ठामि च दिवानिशम् ॥
सर्व्वतीर्थमयो देवि सर्व्वदेवमयः सदा ।
श्रीवृक्षः परमेशानि अतएव न संशयः ॥*॥
तत्फलैस्तत्प्रदानैर्व्वा तत्पत्रैर्यः प्रपूजयेत् ।
तत्काष्ठचन्दनेनापि स मे भक्तः स मे प्रियः ॥
तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमात् ।
तस्याह शिवपुत्री सा नमेद्देवी सदान्विता ॥
अतस्तचन्दनं देवि न धारयति यो जनः ।
तत्पत्रं तत्फलं वा कदापि धारयेत्तदि ॥
बिल्वमूले महेशानि प्राणांस्त्यजति यो नरः ।
रुद्रदेहो भवेत् वत्सं पापकोटियुतोऽपि सन् ॥"
इति योगिनीतन्त्रे पूर्व्वखण्डे ५ पटलः ॥*॥
अपि च ।
"बिल्ववृक्षं तथा देवि भगवान् शङ्करः स्वयम् ।
बिल्ववृक्षतले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः ।
तत्क्षणात् मोक्षमाप्नोति किमन्यैः तीर्थकोटिभिः ।
यत्र नन्दादयो देवास्तिष्ठन्ति शक्तिदैवते ॥
बिल्वमूलतले स्नानं यदि विद्यादिपूरितम् ।
तदैव शाङ्करं क्षेत्रं सर्व्वतीर्थमयं सदा ॥
सर्व्वपीठमयं तत्तु सर्व्वदेवमयं सदा ।
न त्यजेत् शाङ्करं क्षेत्रं न च गच्छेत् कदाचन
प्रिये ॥
समीपे स च चार्व्वङ्गि बिल्ववृक्षो यदि प्रिये ।
काशीपुरसमं तत्तु तत्र प्राणान् त्यजेद्यदि ।
किन्तस्य कोटितीर्थेन काशीवासेन किं प्रिये ॥"
इति पुरश्चरणरसोल्लासे १० पटलः ॥*॥
तद्दानविधिर्यथा,—
"पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ।
यथोत्पन्नं तथा देयं बिल्वपत्रान्यधोमुखम् ॥"
इति मातृकातन्त्रे ५५ पटलः ॥
श्रीशिव उवाच ।
"शृणु देवि प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् ।
पत्रं ब्रह्ममयं देवि अद्भुतं वरवर्णिनि ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः ।
विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥
ब्रह्मविष्णुशिवाः पत्रे वृन्तञ्च शक्तिरूपिणी ।
वृन्तमूले तु वक्त्रं स्यात् पत्रे ब्रह्मपदं प्रिये ॥
त्रिजटापत्रकैकेन हरं वा हरिमर्च्चयेत् ।
कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः ॥
पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् ।
दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं
भवेत् ॥
सर्व्वैरर्च्चनतो देवि त्रिजटामेकमर्पयेत् ।
कैवल्यदो हरिश्चैव दास्येऽहं त्वां स्वरूपताम् ॥
त्वयि कैवल्यदं ज्ञानं धर्म्मकामार्थदं प्रिये ।
वज्रहीनमिदं देवि प्राप्नुयाद्वाञ्छितं फलम् ॥
सवज्रं म्रियते नूनं वज्राघातेन पार्व्वति ।
तस्माच्च साधकश्रेष्ठ वज्रहीनं प्रदापयेत् ॥"*॥
बिल्वपत्रप्रणामप्रदक्षिणान्तरगमनफलम् । यथा,
"भार्य्यां गृहीत्वा यो गच्छेत् सर्व्वसिद्धिमवा-
प्नुयात् ।
ऊर्द्ध्वे सुदर्शनं रक्षेदधः पाशुपतस्तथा ।
पुरो माहेश्वरी रक्षेत् पृष्ठे च शूलधारिणी ।
दक्षपार्श्वे च श्रीनाथो वामपार्श्वे प्रजापतिः ।
चन्द्रसूर्य्यौ धृतौ छत्रमदं पादौ करौ सदा ॥"
इति आगमभैरवतन्त्रे शिवपार्व्वतीसंवादे ६ पटलः ॥ (अस्य गुणा यथा,—
"बालं बिल्वफलं ग्राहि दीपनम्पाचनं कटु ।
कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् ॥
पक्वं गुरु त्रिदोषं स्याद्दुर्ज्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ॥
फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ।
बिल्वादन्यत्र विज्ञेयमामन्तद्धि गुणाधिकम् ॥
दाडिमबिल्वशिवादीनां फलं शुष्कं गुणाधि-
कम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथम भागे ॥)
बि(वि)ल्वपेशिका, स्त्री, (बिल्वस्य पेशिका ।) शुष्कबिल्वखण्डम् । बेलशूँठ इति भाषा । यथा,—
"कफवातामशूलघ्नी ग्राहिणी बिल्वपेशिका ।"
इति राजनिर्घण्टः ॥
बि(वि)ल्वा, स्त्री, (बिल्व+टाप् ।) हिङ्गुपत्री । इति राजनिर्घण्टः ॥ (गुणादयोऽस्या हिङ्गुपत्रीशब्दे ज्ञातव्याः ॥)
विवक्षा, स्त्री, वक्तुमिच्छा । सनन्तवचधातोरप्रत्ययेन निष्पन्नमिदम् । यथा । विवक्षावशात् कारकाणि भवन्ति । इति व्याकरणटीका ॥ शक्तिः । यथा,—
"प्रकृत्यर्थोऽपि खल्वेतद्वृद्धिक्षयस्य विशेषणम् ।
संख्यया तुल्यनीतित्वाद्विवक्षा प्रपद्यते ॥"
इत्येकादशीतत्त्वम् ॥
विवक्षितः, त्रि, वक्तुमिष्टः । सनन्तवचधातोः क्तप्रत्ययेन निष्पन्नमिदम् । प्रकृत्यार्थः । यथा । उपादेयगतायाः संख्याया विवक्षितत्वं युक्तम् । अनुपादेयगता संख्या न विवक्षिता । इति माधवाचार्य्यः । इत्येकादशीतत्त्वम् ॥
विवदमानः, त्रि, विवादकर्त्ता । विपूर्व्ववदधातोः शानप्रत्ययेन निष्पन्नः ॥
विवधः, पुं, (विविधो वधो हननं गमनं वा यत्र ।) पर्य्याहारः । स तु धान्यतण्डुलादिः । मार्गः । पन्थाः । इत्यमरभरतौ ॥ व्रीह्यादेः पर्य्याहरणम् । इति स्वामी ॥ उपरितो वद्धशिक्यस्कन्धवाह्यकाष्ठम् । बाँक् इति ख्यातम् । इति भानुदीक्षितः ॥ भारः । इति मुकुटधृतविश्वः ॥
विवधिकः, पुं, (विवधेन हरतीति । विवध+"विभाषा विवधवीवधात् ।" ४ । ४ । १७ । इति ठन् ।) वैवधिकः । इत्यमरटीका सारसुन्दरी ॥
विवरं, क्ली, (विवृणोतीति । वि+वृ+पचाद्यच् ।) छिद्रम् । इत्यमरः ॥ (यथा, रघुः । ११ । १८ ।
"यश्चकार विवरं शिलाघने
ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां
द्वारतामगमदन्तकस्य तत् ॥")
दोषः । इति मेदिनी ॥ (यथा, महाभारते । १ । १४१ । १७ ।
"एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्याश्च सपत्नेषु नित्योद्विग्नः समाचरेत् ॥"
अवकाशः । यथा, भागवते । ५ । १० । १२ ।
"शिश्नोदरधृतेर्विवरं यमाख्य च
मध्याम यत्र व्यवहारतोऽन्यत् ॥",
विवरणं, क्ली, (वि+वृ+ल्युट् ।) व्याख्या । इति हलायुधः ॥
विवरनालिका, स्त्री, (विवरयुक्ता नाली यस्याः ।) वेणुः । इति त्रिकाण्डशेषः ॥
विवर्णः, पुं, (विरुद्धो वर्णः ।) नीचः । इत्यमरः । २ । १० । १६ ॥ (यथा, मार्कण्डेये । ४१ । १० ।
"भैक्षधर्म्मा विवर्णेषु जघन्या हारिष्यते ॥"
त्रि, विगतो वर्णो यस्य ।) मलिनः ॥ (यथा, रामायणे । २ । २६ । ८ ।
"विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् ।
आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो ॥")
विवर्त्तः, पुं, (वि+वृत्+घञ् ।) समुदायः । अपवर्त्तनम् । नृत्यम् । इति विश्वः ॥ (प्रतिमेदः । यथा, नैषधे । ६ । ८० ।
"देवाङ्गिनेष्यं विवर्त्तमध्ये
कोऽपि भक्तो कोऽप्यलीकमथ्ये ॥"

देशे देशे शूकधान्येषु संख्या
ज्ञातुं शक्या नैव तद्देववेत्त्वा ।
अस्मद्देशे येषु भोगोपभोगा-
स्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥
शालयः कलमा रक्ता व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः केदाराः सुकुमारकाः ॥
राजान्नषष्टिकसितेतररक्तसुरक्त-
स्थूलाणुगन्धितिरियादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शालयः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च ।
पुष्टिं दत्ते श्रमशमनकृद्वीर्यवृद्धिं विधत्ते
कुक्षौ त्वन्नं जनयति सुखं वातकृत्स्वेचकोऽन्यः ॥"
इति राजनिर्घण्टः ॥
अपि च ।
"वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिर-
पाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालमुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यत्कृष्णतुषतण्डुलाः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णमुखं तस्य ज्ञेयो जतुमुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः ॥
कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥"
इति भावप्रकाशः ॥
तस्य यज्ञीयत्वं यथा,—
"यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥
एते पञ्च महायज्ञा ब्रह्मणा निर्मिताः पुरा ।
ब्राह्मणानां हितार्थाय इतरेषां च तन्मुखाः ॥
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
एवं कृत्वा नरो मुक्तास्वादुरिति ! विशुध्यति ॥
अन्यथा व्रीहयोऽप्येते एकैके स्वगपाचिताः ।
मन्तव्या दाहभोक्तॄणां महामांसं तु तत्
स्मृतम् ॥"
इति वाराहे आह्निकतत्त्वान्ताध्यायः ॥
तेन पितृतृप्तिर्यथा । मनुः ।
"तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥"
व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः ।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥"
हविष्यान्नेन शालिव्रीह्यन्नेन । इति । अमा-
वास्यास्तिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्धं कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥"
इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकत्वेन विधायकं शेषाद्धि-
धान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः ।
"शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"
इति छन्दोगपरिशिष्टे व्रीह्यप्राप्ता नवशस्येष्टौ-
शालिविधानात् यज्ञतुल्यन्यायात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्द्धं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥"
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा,—
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते ॥ तत्र
"व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः ।
अप्रतीतयवाप्रामाण्यकल्पनम् ।" इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्म्म-
करणं यथा,—
"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति तिथ्यादितत्त्वम् ॥
व्रीहिकः, त्रि, (व्रीहिरस्यास्तीति । व्रीहि+
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति ठन् ।)
धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥
व्रीहिकाञ्चनः, पुं, (व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् ।) मसूरः । इति त्रिकाण्डशेषः ॥
व्रीहिपर्णी, स्त्री, (व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् ।) शालपर्णी । इति राजनिर्घण्टः ॥
व्रीहिभेदः, पुं, (व्रीहेर्भेदः ।) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः । अणुः २ ।
इत्यमरः ॥
व्रीहिमयः, पुं, (व्रीहेः पुरोडाशः । व्रीहि+"व्रीहेः
पुरोडाशे ।" ४ । ३ । १४८ । इति मयट् ।)
व्रीहिनिर्म्मितपुरोडाशः । इति सिद्धान्तकौमुदी ॥
(व्रीह्यात्मके, त्रि । यथा, महाभारते । १३ ।
११५ । ५६ ।
"श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥")
व्रीहिराजकः, पुं, (व्रीहीणां राजा । टच् समासे ।
ततः कन् ।) कङ्गुधान्यम् । चीनकधान्यम् ।
इति मेदिनी ॥
व्रीहिश्रेष्ठः, पुं, (व्रीहिषु श्रेष्ठः) शालिधान्यम् ।
इति राजनिर्घण्टः ॥
व्रीही, [न्] त्रि, (व्रीहिरस्यास्तीति । व्रीहि+
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ इति इनिः ।)
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥
व्रीह्यगारं, क्ली, (व्रीहीनामगारम् ।) धान्यगृहम् ।
तत्पर्य्यायः । कुशूलः २ । इति त्रिकाण्डशेषः ॥
व्रुड, शि संवृतिसंहत्योः । मज्जे । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-अकर्म्म-सेट् ।)
रेफयुक्तः । शि, व्रुडति अव्रुडीत् वुव्रोड ।
मज्जो मज्जनम् । इति दुर्गादासः ॥
व्रूस, कि वधे । इति कविकल्पद्रुमः ॥ (चुरा०-पक्षे
भ्वा०-सक०-सेट् ।) रेफयुक्तो दीर्घो । कि,
व्रूसयति व्रूसति । इति दुर्गादासः ॥
व्रैहः, त्रि, (व्रीहेरवयवो विकारो वा । व्रीहि+
"बिल्वादिभ्योऽण् ।" ४ । ३ । १३६ । इत्यण् ।)
व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी ॥
व्रैहेयः, त्रि, (व्रीहीणां भवनं क्षेत्रम् । व्रीहि+
"व्रीहिशाल्योर्ढक् ।" ५ । २ । २ । इति ढक् ।)
व्रीह्युत्पत्तियुक्तभूम्यादिः । इत्यमरः ॥
व्ली, ग शि गतिवृत्योः । इति कविकल्पद्रुमः ॥
(क्र्या०-प्या०-पर०-सक०-अनिट् ।) अन्तःस्थ-
तृतीयोपधः । शि, व्लिनाति । व्लीनः वीनिः ।
इति दुर्गादासः ॥